वक्रानक्रामौढ्यमौढ्यांशतोऽशाः शुक्राशाल्याः केन्द्रजा नन्दनिघ्नाः ।
भौमाद्रक्ता वेदपिण्डाष्टबाणैः यानायातान्यर्कजांशा दिनानि ॥ २६ ॥
४ २८ ८ ५
भौमोदयाद्दिक्करदिग्युगैश्च कौटिल्यमार्गास्तमयोदयाः स्युः ।
१० २ १० ४
मासैः सुरेज्योदयतः सपादवेदैर्युगैः साङ्घ्रियुगैर्भुवा च ॥ २७ ॥
४। ४ ४। १
मन्दोदयाद्रामयुगाग्निभिश्च दलान्वितैः साङ्घ्रिभुवा क्रमेण ।
३ ४ ३ १।
परोदयाद्वक्रगतिः परास्तं पूर्वोदयो मार्ग इतोऽस्त ऐन्द्र्याम् ॥ २८ ॥
परोदयो ह्यस्य दिनैरमीभिर्दन्ताग्निभूपाग्निरदैरदैश्च ॥
३२ ३ १६ ३ ३२ ३२
ततस्ततस्ते भृगुजस्य सद्वक्रादयः स्युर्दिवसैरमीभिः ॥ २९ ॥
खवेदपक्षैस्त्रियमैर्गजैश्च त्रिलोचनैः खाग्नियमैः खशैलैः ॥
२४० २३ ८ २३ २३० ७०
स्थूलं यतोऽस्माज्झटिति प्रबोधः संसत्सु वक्ष्येऽत्र एव सूक्ष्मम् ॥ ३० ॥

इति श्रीमन्महादेवदैवज्ञात्मजश्रीकृष्णदैवज्ञविरचिते करण-
कौस्तुभे पञ्चतारास्पष्टीकरणाधिकारस्तृतीयः ॥



## चतुर्थोऽधिकारः ।

लङ्कायां भगृहोदयास्त इभभान्यङ्काङ्कदस्राः क्रमा-
२७८ २९९
द्वाऽग्याग्निद्वयवह्नयो विघटिकाः स्थाप्याः क्रमाद्व्युत्क्रमात्
३२३
हीनाढ्याः क्रमगोत्क्रमैश्चरदलैर्मेषादिजा व्युत्क्रमा-
ज्जूकादेऽथ चेष्टकालजरवे र्भुक्तायनांशस्य ये ॥ १ ॥
भोग्यांशाः स्वोदयघ्ना गगनगुणहृता भोग्यकालस्तथैव ।
३०
यातांशैर्यातकालोऽथाभिमतघटिकानां पलेभ्यो विशोध्यः ॥
भोग्यैः शोध्यस्तदग्र्योदय इति च पुनः शेषमभ्राग्निनिघ्नम् ।
३०
शुद्धाग्रेणोद्धृतं तद्युतमुरलमजतः शुद्धभैर्योजितं स्यात् ॥ २ ॥
लग्नमदोऽयनभागविहीनं चेन्न विशुध्यति चेष्टत एष्यः ।
साग्निगुणाद्विजभोदयभक्ताल्लब्धफलैर्व्ययो रविरादयः ॥ ३ ॥
३०
रवेर्भोग्यकालेन लग्नेन काले युतः स्यादभीष्टोऽन्तरस्थोदयाढ्यः ।
तनूभास्कराविकराशौ तदंशान्तरघ्नोदयः खाग्निहृद्वेदभीष्टः ॥ ४ ॥
३०
इनादूनलग्ने द्युरात्रेऽत्र शोध्यः स चेद्राग्निघ्न सषड्भार्कतः स्यात् ।
इनात्पूर्वलग्नं निशोणमकारास्त्रसाध्यं तथाऽभीष्टकालोऽपि तद्वत् ॥५॥
पञ्चकखण्डं प्रथम स सौम्यो गोलः परार्धे कथितः स याम्यः ।
सौम्यायन तद्गमनं मृगाद्याद्याम्यं कुलीरात्पचरोऽत्र तस्य ॥ ६ ॥
उदग्गतत्तरगोलगते रवौ चरपलैर्युतहीनितनाडिकाः ।
तिथिमिता द्युदलं द्विगुणं दिनं गगमशुद्धमिदं रजनीमितिः ॥ ७ ॥
१५ ६०

---

१ स. य. पाठः ।

## क्रान्तिखण्डानि क्रान्तियोगाश्च

| | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ |
| क्रान्तिख० | ० | २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | ० | ० | ० | ० |
| | | २७ | २५ | २१ | १८ | १३ | ५ | ५९ | ४९ | ३६ | २४ | ११ | ५७ | ४० | २३ | ११ |
| क्रान्तियोगाः | ० | २ | ४ | [illegible] | ९ | ११ | १३ | १५ | १७ | १९ | २० | २१ | २२ | २३ | २३ | २३ |
| | | २७ | ५२ | १३ | ३१ | ४४ | ४९ | ४८ | ३७ | १३ | ३७ | ४८ | ४५ | २५ | ४८ | ५९ |

प्रभाकराक्षभाकृती तयोर्युतेः पदं श्रुतिः ।
पलाभिधा प्रमाणिका पलप्रभाऽग्रसायकैः ॥ ८ ॥
५०
हता पलश्रवोद्धृता पलज्यका धनुस्तथा ।
पलांशकाः स्वमध्यतोऽस्तुदग्दिशोऽस्तुदक्स्थिताः ॥ ९ ॥
लम्बाभिधाः स्वनन्देभ्यो विशुद्धास्ते सदोत्तराः ।
९०
लम्बज्यका तदीया या दोर्ज्यका साऽत्र कथ्यते ॥ १० ॥

षोढा द्वौ जगती तथेन्द्रियविधा खं वेदधाऽश्वो नगा-
६ २ १ ५ ० ४ २७
क्षीण्यक्षाग्निमहीयमा गजभुवो विश्वे शरा गोशराः ॥
२५ २१ १८ १३ ५ ५९
गोवेदा रसपावकाः कृतयमा रुद्रा नगाक्षा वियत्-
४९ ३६ २४ ११ ५७ ४०
वेदास्त्र्यग्निशिवा दलान्यपमजान्येभ्यः प्रसाध्योऽपमः ॥ ११ ॥
२३ ११

सायनग्रहभुजांशका रसैर्भाजिता गतदलानि तद्युतिः ।
६
भोग्यघ्नशेषहतितो रसाप्तियुक्कुलेटदिग्लवयुतोऽपमो भवेत् ॥ १२ ॥
६ १००

क्रान्त्यक्षसंस्कारलवा नताः स्युः खाङ्कच्युताश्चोन्नतजा दिनार्धे ।
९०
मध्योन्नतांशक्रमभौर्विकाप्तं व्योमाभ्रषट्कं श्रवणो दिनार्धे ॥ १३ ॥
६००

क्रान्तिज्यका नखलवोदितवर्गहीनैः
२०
सूर्यैर्हृता पलभया गुणिताऽपमज्या ।
१२
स्यात्सिञ्जिनी चरभवा दशसंगुणं य-
त्कार्मुकं भवति सूक्ष्मतरं चरं वा ॥ १४ ॥

---

१ ग. °स्तनः ।

हिमकरप्रमुखेष्विपुसंस्कृताऽयमगुणाच्चरमुक्तवदानयेत् ।
इति मतोऽपि तथा दिनरात्रिके स्विह विशेषफलं ब्रुवतेऽपरे ॥ १५ ॥
गगनगस्थितभोद्यसंगुणा निजगतिः खखनागकृहृत्पलैः ।
१८००
गगनषड्घटिकाः सहितास्ततो दलमहस्त्विदमन्वितमूनितम् ।
६०
चरपलैर्द्विगुणैः खलु गोलयोरिति विलोमविधौ रजनीमिति ॥ १६ ॥
इदं गाथाछन्दः ।
अतीतो भवेत्काल ऐन्द्र्यां परत्रावशेषोऽपि पूर्वं परं चोन्नतं स्यात् ।
भवेद्युनतेनोनितं तन्नतं स्याद्दिनार्धं नतादुन्नतं वाऽन्यथाऽतः ॥ १७ ॥
उदक्स्वाम्यगोले चरज्यान्वितो ना त्रिजीवाहसंज्ञो रसघ्नान्नतात्स्यः ।
६
विलोमज्यकोनो भवेच्चेष्टसंज्ञो दिनार्धश्रुतिस्त्विष्टभक्ताद्यनिघ्नी ॥ १८ ॥
अभीष्टश्रवोऽप्यस्य वर्गाद्युगेन्द्रैर्विहीनात्पदं सेष्टभाभीष्टकाले ।
१४४
भवेदङ्गुलाद्याङ्गुलं शङ्कुसूर्यघ्नवोऽभीष्टभावर्गतः सार्कवर्गात् ॥ १९ ॥
१४४
पदं चेष्टकर्णो भवेदाद्यनिघ्नी दिनार्धश्रुतिस्तेन भक्तेष्टसंज्ञः ।
अथेष्टोनिताद्याद्विलोमं धनुर्यद्दास्तं रसैर्नाडिकाद्यं नतं स्यात् ॥ २० ॥
नतं तिथ्यधिकं चेत्स्यात्तिथ्यूननतजीवया ।
युता त्रिज्या नतस्येयं विलोमज्या भवेत्तदा ॥ २१ ॥
क्रान्त्यक्षसंस्कारविहीनखाङ्काः समुन्नता यन्त्रलवा दिनार्धे ।
९०
यन्त्रांशमौर्वी गुणिता खबाणैर्दिनार्धयन्त्रांशगुणोद्धृताऽस्याः ॥ २२ ॥
५०
चापांशकैः संगुणितादद्युखण्डात्खाङ्कोद्धृतादुन्नतनाडिकाः स्युः ।
खनन्दाहता नाडिका चोन्नता या दिनार्धोद्धृता लब्धमौर्वी विनिघ्नी ।
९०
द्युखण्डोत्थयन्त्रांशमौर्व्या खबाणैर्हृता लब्धकोदण्डतो यन्त्रभागाः॥२३॥
५०

खखपट्शभाश्रुविहृतास्तु ततो भुजभागका इह तुरीयलवाः ।
६००
अथवाऽत्र यन्त्रलवमौर्विकया खखपट्हृता श्रुतिरतोऽपि रुचिः ॥ २४ ॥
६००

जलसमभुवि वृत्तस्यैव केन्द्रस्यशङ्कोः
विंशति सरवि भाग्रं तत्र चिह्ने परेन्द्रयौ ।
तदुपरिगतसूत्रस्यार्धमुल्लङ्घ्य साध्ये
धृतितिमिमुखपुच्छे सूत्रमन्ये दिशौ स्तः ॥ २५ ॥

चार्कापमज्यागुणितेऽष्टकर्णो लम्बज्यया ऽऽप्तः सभुजोऽर्कदिक् स्यात् ।
याम्याक्षभासंस्कृत एवमत्र भुजेष्टभावर्गवियोगमूलम् ॥ २६ ॥
कोटिः शलाके भुजकोटिसंख्ये भाग्रात्तृकेन्द्राच्च तथा निवेश्ये ।
यद्युग्मयोगो वरुणेन्द्रकाष्ठे कोटिस्ततोऽन्ये विदितो भुजो वा ॥ २७ ॥
स्पष्टा क्रान्तिः खेटतः क्रान्तितश्च बाहुं कोटिं साधयित्वा दिशश्च ।
दद्याद्धीमान्केन्द्रतः पूर्वतोऽत्र कोटिं खेटे प्राक्कपाले परस्याम् ॥ २८ ॥
मत्यक्संस्थश्चेत्तदग्रात्स्वदिक्स्थं बाहुं छायां बाहुकेन्द्रान्तराले ।
बाहुच्छायायोगसंस्थं नरं तं कृत्वा बिन्दोः सूत्रमेकं प्रसार्य ॥ २९ ॥
शङ्कोरग्रे तद्यथा स्याच्चले च वंशाधारे सुस्थिरे कोटिमन्ये ।
प्रत्यक्खेटे पूर्वगां पूर्वगेऽत्र प्रत्यक्संस्थां भाग्रतः सूत्रबाहू ॥ ३० ॥
तत्सूत्रदृष्ट्या नलिकैकरन्ध्रात्संदर्शयेत्खे खचरं विधिज्ञः ।
दिवैव पूर्वं विरचय्य सर्वं दक्शास्त्रसाम्यप्रतिपादनार्थम् ॥ ३१ ॥
तथैव सर्वं परिसाध्य देयं कोट्यादि वामं शुचिभाण्डगं कम् ।
संस्थाप्य केन्द्रे प्रतिबिम्बितं के खेटं प्रपश्येच्चलके विसूत्रे ॥ ३२ ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते करण-
कौस्तुभे त्रिप्रश्नाधिकारश्चतुर्थः ॥ ४ ॥

---

१ रुक °च सर्वं ।

## पञ्चमोऽधिकारः ।

रविविधुग्रहमादरतोऽधुना गणितशास्त्रसमर्थनहेतवे ।
मुनिवरैर्हुतदत्तफलं बहु गदितमत्र चमत्कृतितो ब्रुवे ॥ १ ॥
खगजवाद्गतगम्यदिनाद्रवात्खरसलब्धलवै रहितो युतः ।
६०
भवति तत्समयोस्थखगस्तथा घटिकयेति कलादि विहीनयुक् ॥ २॥
पर्वान्त एवं रविराहुचन्द्रान्संचाल्य राहूनरवेर्भुजांशैः ।
इन्द्राल्पकैः स्याद्ग्रहसंभवोऽत्र याम्यैर्गजोनैरपि चेद्रवेस्तु ॥ ३ ॥
८
पक्षेऽथवाऽङ्कै रविभिश्च मासैः पक्षोनितैः पक्षयुतैश्च वैर्वा ।
६ १२
व्यगोर्भुजांशैर्ग्रहसंभवस्तं विलोक्य धीमान्गणितं विदध्यात् ॥ ४ ॥
पक्षभवं चलनं व्यगुसूर्ये खं तिथयः खयमा गृहपूर्वम् ।
० १५ २०
स्याद्ग्रसमासभवं तु तथैव पण्णिगमा जगती कथितं ज्ञैः ॥ ५ ॥
६ ६ ४ १
सूर्यगती रसलब्धरविबिम्बं स्वीयदशांशयुगङ्गुलपूर्वम् ।
६
वेदनगैर्विहृता विधुबिम्बं भुक्तिकलाः शशिनोऽङ्गुलपूर्वम् ॥ ६ ॥
७४
इन्दुगतिः पृथिवीद्युतिबिम्बमाकृतिहृत्स्वखशैललवोनम् ।
२२ ७०
भास्करभुक्तिनगाप्तिविहीनं केचन राहुतनुं प्रवदन्ति ॥ ७ ॥
७
शीतकरं तिमिरं तु पिधत्ते तीक्ष्णकरं च निशाकरमूर्तिः ।
यत्तु पिधानपिधेयदलैक्यं मानदलैक्यमिदं विमरं तत् ॥ ८ ॥
स्यात्स्थगितं तु पिधेयवियुक्तं खग्रहणं गदितं परिशेषम् ।
प्राक्परतस्तु विधोर्मुखमोक्षौ क्रान्तिवृतेस्तरणेर्विपरीतम् ॥ ९ ॥

---

१ म. 'श्च रोसलवाग्निनमह्नु'। २ ख. म. 'तु पिधेयविधान'।

स्पष्टविन्दुदोर्ज्या स्वादिगंशहीना द्विघ्न्यङ्गुलाद्यो विशिखो विधोः स्यात् ।

१०

रामाहतोऽसौ कलिकादिको वा विराहुजीवद्युतिगोलदिक्कः ॥ १० ॥

३

युग्मे पदे मध्यशरस्य योगात्स्थित्यर्धभागेन तथाऽन्तराच्च ।
ओजे विलोमं ग्रहमुक्तिवाणौ चन्द्रग्रहे ते विपरीतदिक्काः ॥ ११ ॥

मानैक्यखण्डशरवर्गवियोगमूलं त्रिघ्नं जवान्तरलवैर्विहृतं स्थितिः सा ।
नाडीमुखा भवति मर्दमितिस्तथाऽत्र मानान्तरार्धविशिखादथ या स्थितिस्तु ॥

निजनिजाङ्घ्रियुतेषु पलैर्युता विरहिता मुखमुक्तिभवेत्स्थितिः ।
स्पगुविधौ विषमे तु पदेऽन्यथा समपदे स्थितिवत्कुरु मर्दके ॥ १३ ॥

पर्वावसानं ग्रहमध्यकालो वियुग्युतः स्पर्शविमुक्तिकालौ ।
निजस्थितिभ्यां निजमर्दकाभ्यां संमीलनोन्मीलनके च वेद्ये ॥ १४ ॥

क्षेपे स्पर्शो दिनस्येन्दोर्याते मुक्तिस्तदूनितम् ।
द्युदलं तु रवे रात्रेस्तदूनितनिशादलम् ॥ १५ ॥

पूर्वापरं नतं चात्र वलनस्यात्र सिद्धये ।
ग्रस्तोदयास्तयोरेन ज्ञेयं गणितकोविदैः ॥ १६ ॥

खाङ्काहतं द्युदलहृन्नतमस्य मौर्वी

९०

स्पर्शादिकं पलहता त्रिभजीवयाऽऽप्ता ।
पूर्वापरे नत उदग्यमदिग्विमांशोः
क्रान्तिस्त्रिभायनयुताद्ग्रहसंस्कृतेर्ज्या ॥ १७ ॥

खाक्षोद्धृता मानदलैक्यनिघ्नी स्पष्टाङ्गुलाद्या वलनस्य जीवा ।

८०

भित्तौ शिलायां सुसमे पदे वा ज्ञः पारिलेखं विलिखेद्रवीन्द्वोः ॥१८॥

मानैक्यखण्डमितकर्कटकेन वृत्तं
साध्यं पिधेयशकलेन तदन्तराले ।
दिक्शुद्धिवं प्रथमतो वलनस्य जीवे-
न्दुया स्पार्शिकी भवति सव्यमसव्यमत्र ॥ १९ ॥

याम्योत्तरा यदि तु मोक्षभवा प्रतीच्या
वामं रवेर्वलनजोति शरौ तदग्रात् ।

१ ग. ओजाद्विलो° । २ ग. °तं तत्र च° । ३ ग. जीवा प्राक्स्या° ।

देयौ ज्यकावद्य मध्यशरो यथाशः

केन्द्राप्तिभैर्वलनचिह्नभैवस्य सूत्रे ॥ २० ॥

पुच्छाननगते देयः स्पर्शमध्ये विमुक्तिजे ।

शरत्रयगते चिह्ने वृत्तानां त्रितये शुभे ॥ २१ ॥

ग्राहकखण्डभवे ग्रहमध्यमुक्तिमितिस्त्वथ मध्यशराग्रात् ।

स्पर्शविमुक्तिशराग्रगरेखे मग्रहमुक्तिपयावथ केन्द्रात् ॥ २२ ॥

मानार्धविश्लेषभवाहैर्मितो तद्दूषितन्मार्गयुतिद्वयेऽपि ।

ये छादकार्धमभवे वृत्ती ते संमीलनोन्मीलनके च वेधे ॥ २३ ॥

छन्नताभिमतं स्थितिमक्तमङ्घ्रियुतं निगमावधि सैकम् ।

आगजमङ्घ्रिविमुक्कुयुगूर्ध्वमिष्टपिधानमदः स्थितितो वा ॥ २४ ॥

८

रुद्रघ्नेतसमायुता मधुगतैर्मासैः पृथक्सेश्वराः

११

स्वाभ्राग्न्यंशयुतास्त्रिरामविहृता लब्धैर्युतास्तेऽधिकैः ।

७०

मासाः स्युर्गुणिता भुवा च वियता खाम्भोधिभिः साङ्घ्रिभिः ।

१ ० ४० । १५

शुक्लान्ते भमुखो व्यगुर्भवति भूखत्रिंशदेकान्वितः ॥ २५ ॥

१ । ० । ३० । १

द्विगुणितभगणाद्यं व्यश्विनस्य त्रियुक्तं भवति शिखरितष्टं पर्वपो वर्तमानः ।

विधिशशिसुरपैशास्त्राम्बुपाग्न्यन्तकानां युगणवदधिमासस्याऽऽगमोऽप्यत्र वेद्यः ॥

धूम्रः कृष्णः कृष्णरक्तः पिशङ्गः पादैर्ग्रस्तोऽब्जः सदाऽर्कस्तु कृष्णः ।

स्पष्टः प्रोक्तः स्पष्टतायै विधिज्ञप्रोक्त्याऽस्माभिः पारिलेखोऽन्यथाऽग्रे ॥ २७ ॥

अर्कतृपांशरवीन्दुपिधानं दृग्विषयं न हि भानुविभावात् ।

दृग्गणितैक्यधियाऽखिलवच्च दृष्टहुवे विदधीत विधिज्ञः ॥ २८ ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते करणकौस्तुभे

चन्द्रग्रहणाधिकारः पञ्चमः ॥ ५ ॥

---

१ ग. °त्रिभिर्वै° । २ ग. °भवोऽस्य सू° । ३ ग. °वृत्तिः स्याच° । ४ ख. सू°मे° ।
५ ख. ताद्भुवा । ६ ख. त्रियुता । ७ ख ग. °रासैशाम्बु° । ८ ग. °स्मोऽस्मत्स्त्रा° ।

## षष्ठोऽधिकारः ।

त्रिभोनिता दर्शविरामलग्नात्क्रान्त्यक्षसंस्कारलवा नतांशाः ।
संस्कारदिक्कास्तु हरो नतांशसिद्धांशवर्गान्वितसार्धषड्किः ॥ १ ॥
२४ १०।३०
त्रिभोनितार्कान्तरभागकाष्ठा लवोननिघ्नाभिमुखो हरांशाः ।
१०
नाड्यादिकं लम्बनमर्कतोऽधिके हीने त्रिभोने स्वमृणं तिथौ स्यात् ॥२॥
षड्घ्नलम्बनमितैर्लवैर्वियुग्युक्तवित्रिभनतांशसिञ्जिनी ।
स्वाम्बराम्बुधिलवोनिताङ्गुलाद्या नतांशदिगसौ नतिस्त्रिहृत् ॥ ३ ॥
४०
स्पष्टभुक्तिविवराहता हृता मध्यभुक्तिविवरेण सा स्फुटा ।
बिम्बसङ्गुणितलम्बन कलास्तद्विहीनसहिताद्द्युगोः शरात् ॥ ४ ॥
१३
छन्नतादिनतिसंस्कृताद्यो षड्गुणस्थितिलवैर्वियुग्युतात् ।
द्विस्थदर्शभवपित्रिभोदयाल्लम्बने कथितवत्तिथौ कुरु ॥ ५ ॥
मध्यमे स्थितिविहीनयुते तौ स्पर्शमोक्षसमयौ परिवेद्यौ ।
मर्दतोऽपि च निमीलनमेवोन्मीलनं च सुधिया प्रविधेयम् ॥ ६ ॥
ग्रासाङ्गुलघ्नं स्थितिखण्डकेन स्वीयं स्वकीयेन हृतं स्वभीष्टम् ।
रूपाद्विप्रयुग्वा कृतकन्दलाद्यमभीप्सितासन्नमिदं विधानम् ॥ ७ ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते स्वकृततन्त्ररत्नादुद्धृते
करणकौस्तुभे सूर्यग्रहणाधिकारः षष्ठः ॥ ६ ॥

## सप्तमोऽधिकारः ।

न्यगुर्रविश्च रविस्तिथिपत्रतः समवगम्य गतागतयोर्युतिम् ।
कुरु तिथेः शशिराहुतनू ततः स्थितिशरादिकमत्र पुरोदितम् ॥ १ ॥
युत्या हृता दन्तरसा विधोः स्युर्बिम्बाङ्गुलान्यभ्रनवासचन्द्राः ।
६३२ १५९०
युत्योद्धृता स्मा द्युतिरत्र योगदलं द्वयोस्तत्तरणेरिसेः स्यात् ॥ २ ॥
निजेन्दुपर्वणि त्रिभैर्युतोनितस्य दोर्ग्रहे ।
रवेः तापनस्य भूर्द्वयं द्वयं स्वसूर्यदिक् ॥ ३ ॥
१ २ २
नते पञ्च काष्ठातिथी नाडिके स्याच्छशी सार्धभूर्द्वौ परे प्राचि याम्याम् ।
५ १० १५ १ १॥ २
उदक्संस्कृतावङ्ग्रयो बाणदिक्तो यमोदग्भवैः सव्यमेतैरसव्यम् ॥ ४ ॥
मध्योऽन्यदिक् खग्रहणं तु शेषं मध्यात्परे प्राग्ग्रसनाङ्घ्रिभिश्च ।
स्तः स्पर्शमोक्षाविति खग्रहाच्च संमीलनोन्मीलनके च वामम् ॥ ५ ॥
इदं भवेद्रविग्रहे विलोमतः शशिग्रहे ।
द्विधा द्वयं त्रिधा त्रयं युगानि सायकास्त्रिधा ॥ ६ ॥

रसाः पञ्चपाऽगाश्चतुर्धा द्विधाष्टौ विधोश्छन्नजाश्चाङ्ग्रयस्तेऽङ्गुलाद्ये ।
घटीभिर्द्विकार्धयुक्तैकपक्षैः कुयुग्माब्धिषड्भिर्मितैर्मर्दजाश्च ॥ ७ ॥

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रासः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| चन्द्रग्रासाङ्घ्रय. | २ | २ | ३ | ३ | ३ | ४ | ४ | ४ | ५ | ५ | ५ | ६ |

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| ग्रासः | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ |
| चन्द्रग्रासाङ्घ्रय | ६ | ६ | ६ | ६ | ७ | ७ | ७ | ७ | ८ | ८ |

| | | | | |
|---|---|---|---|---|
| घटि: | ० | १ | १ | २ |
| | ३० | ० | ३० | ० |
| मर्दजा अङ्घ्रय. | १ | २ | ४ | ६ |
| | ० | ० | ० | ० |

---

१ भ. "रवि च रति" निधि" ।

## अष्टमोऽधिकारः ।

*निषेधयन्त्यस्तमिते सुरेज्ये भृगौ तथा वा शुभमङ्गलानि ।
तेन ग्रहाणामुदयास्तकर्म ब्रवीमि कृष्णः शिवतुष्टिकामः ॥ १ ॥
अस्तोदयासन्नदिनं विदित्वा पूर्वोक्तयुक्त्यौ खचरोष्णरश्मी ।
खगाच्चरं तद्दिनराशिमानं त्रिप्रश्नयुक्त्या विदधीत धीमान् ॥ २ ॥
शीघ्राङ्काधरथकर्णाः स्युर्निघोरकी नगेन्दवः ।
१२ १७
विश्वे रुद्राः खगास्तिथ्यः कालांशा बुधशुक्रयोः ॥ ३ ॥
१३ ११ ९ १५
कुटिलयो रहिताः शशिना त्वथो शरकलाः क्रमतो रसखेन्दवः ।
१०६
रसगुणेन्दव इष्वचलाः क्रमात्खयुगशीतकराः खयुगेन्दवः ॥ ४ ॥
१३६ ७५ १४० १४०
खवेदाः खपक्षाः खनागाः खतर्काः खखाब्जाः कुजाद्येषु पातांशकाः स्युः ।
४० २० ८० ६० १००
भृग्वोः स्वमध्याशुकेन्द्रेण हीना अथेषोः कला वाऽङ्गुलानि विभक्ताः ॥५॥
मन्दस्फुटात्खेचरतोऽपि पातात् दोर्ज्या स्वविक्षेपकलाविनिघ्नी ।
स्वशीघ्रकर्णेन हृता शरः स्याद्विपातमन्दस्फुटगोलदिक्कः ॥ ६ ॥
अपमजोत्क्रमसिञ्जिनिका खगाश्विमयुताश्च तदूनितखेषुभिः ।
त्रिगुणहृत्कलिकादिशरो हतस्त्वपमसंस्कृतये स भवेत्स्फुटः ॥ ७ ॥
अथ कुजरविजेज्या अस्तमायान्ति पश्चात्
लघुगतय इनेतेः प्राक् समुद्यन्ति चेन्दोः ।
इदमपि विपरीतं द्राग् जवाद्वा भृग्वो-
र्यदि न कुटिलगौ तौ पूर्ववेतद्वदूह्यम् ॥ ८ ॥
परे प्राक् त्रिभाढ्योनितात्खेटतो येऽपमाक्षांशसंस्कारतो नम्रभागाः ।
खनन्दच्युताश्चोन्नतांशास्तु तज्ज्ये नतांशज्यका क्षेपनिघ्नी विभक्ता ॥ ९ ॥
९०
उन्नतांशज्ययाऽऽप्ताः कलास्ताः खगे ह्येकभिन्नांशयोर्वाणनम्रांशयोः ।
स्युर्धनर्णं परस्ताद्विलोमं खगे दृष्टिकर्मेति खेटोदयास्ते त्विदम् ॥ १० ॥

* अयं श्लोकः ख. ग. पुस्तकयोर्नास्ति ।

१ ख. "कल्याऽत्र समोप्ता" । २ ख. स्वशीघ्रेण कें" ।

कल्पयो दृग्ग्रहसूर्ययोर्लघुरिनो लग्नं परोऽस्मान्तरे
पूर्वोक्ता घटिकाः परेऽङ्गभयुजोः कालांशकाः षड्हताः ।
६
उक्तेभ्योऽप्यधिकैर्भविष्यति गतोऽस्तोऽल्पैरमीभिः पुरा
पुष्टैरुद्गमतो युदेष्यति ततः स्वल्पैरपीष्टैरिति ॥ ११ ॥

प्रोक्तेऽष्टकालांशवियोगलिप्ताः खाग्न्याग्निनिघ्ना रविभोदयाप्ताः ।
३००
तत्ससमाप्ता यदि पश्चिमे स्युस्ताः क्षेत्रलिप्ता गतिजान्तराप्ताः ॥ १२ ॥
यक्षे जवैक्येन हृता गतैष्यैस्ताभिर्दिनैरस्त उतोदयः स्यात् ।
इमौ निरुक्तौ रविणोदयास्तौ नित्योदयास्तावथ संब्रवीमि ॥ १३ ॥
सूर्यास्तकाले खचरोऽल्पकोऽर्कात्सपड्भसूर्यादधिकोऽभ्युदेति ।
रात्रौ च यात्यस्तमथोऽन्यथाऽसौ दृकर्मभाक् प्राक्परतस्तु खेटः ॥ १४ ॥
खगात्केपलाद्युद्गमास्ते सषड्भादिते नाड्भाढ्यार्कभोग्योऽपि युक्तः ।
समध्योदयाढ्यो निशायास्तकालो भवेत्तत्र तत्कालखेटः स्फुटोऽसौ । १५॥
मुहुस्तु चेन्दोर्यदि गोपलाढ्यान्यूनोऽपि युक्तः मतिनाधिकं सः ।
पलद्वयेनैव भवेत्स्फुटोऽसौ किं तत्र तात्कालिकशीतरश्मेः ॥ १६ ।
अगस्त्यभा घावयुतोनिता ये गजग्रहा नागनगाश्च तैस्तु ।
८ ९८ ७८
तुल्ये रवौ यात्युदयं तथाऽस्तं घटोद्भवोऽभास्फुटताऽस्ति काचित् ॥१७॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते करणकौस्तुभ
उदयास्ताधिकारोऽष्टमः ॥



१ ख. ग. °र्थोऽत्या च° । २ क ख. °ङ्गेऽस्ने । ३ ख. °भोऽग्नः पत्रेतः ।

# नवमोऽधिकारः ।

( * अधुना छायाधिकारो व्यक्ती क्रियते । )

प्रागूदृक्कर्मखगोऽधिकोऽस्तमयतोऽल्पो लग्नगोऽसौ भवेत्
रात्रौ दृश्य इहास्य भोग्यसमयो लग्ने तु कालान्वितः ।
तन्मध्योदययुग्भवेद्दिनगतं खेटस्य भूयोऽपि वा
चन्द्रस्याङ्कपलोनितं स्फुटमथो कार्यं दिनाद्युक्तवत् ॥ १ ॥

१

भिन्नश्लोदितवत्खगद्युविगतात्साध्यं प्रभार्थं ततो
माद्याद्रात्रिगतं भवेदथ च भा खेटस्य यन्त्रांशतः ।
यद्वा स्वच्छजलादिबिम्बितखगं पश्येद्दृगौच्चान्नयेत्
लब्धं चलृप्तमिति तु तेन विभजेच्चाङ्घ्रिम्बलम्बान्तरम् ॥ २ ॥
निघ्नं सूर्यैर्भा ततो द्युमयातं ज्ञात्वा नाडीर्वाऽनुमित्या निशीतः ।

१२

तत्कालोत्थात्खेचरात्तत्पराद्यैर्दृक्छायादेर्विधोर्गेपलाढ्यः ॥ ३ ॥
प्रागूदृष्टिखेटाङ्कभयुक्तभान्वोरल्पस्विनोऽन्यो ह्युदयोऽन्तराले ।

६

कालो द्युशेषो दिविगोदयेऽसौ निशागतो वा दिविगेऽल्पपुष्टे ॥ ४ ॥
तदूनिताढ्यो दिविगद्युयातः सूर्यास्तकालाश्रिशि यातकालः ।
गलाबोऽल्पपुष्टोऽनुमितासु यस्तत्पलैर्युतो नो द्विगुणैः स्फुटोऽसौ ॥ ५ ॥

उदयास्ताधिकारोक्तस्फुटक्रान्तिविधानतः ।
पूर्वोक्तवाहुकोट्याद्यं तत्साधनमिहोदितम् ॥ ६ ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते
करणकौस्तुभे ग्रहच्छायाधिकारो नवमः ॥

---

* मनुलिखितोऽयं ग्रन्थः अ. ग पुस्तकयोर्नास्ति ।

१ ग. °फलान्वितं । २ क. ग °थ दिनसाधनमिहोदितम् ॥ ६ ॥

## दशमोऽधिकारः ।

* शृङ्गोन्नतौ बहुविधं फलमामनन्ति
चन्द्रोदयेऽन्यदिवसे शशितुङ्गशृङ्गम् ।
लोके चमत्कृतिकरं तत आतनोति
कृष्णो विचित्रगणितं शिवतुष्टिहेतोः ॥ १ ॥
मासाद्ये चरणेऽन्तिमेऽत्र दिवसे शृङ्गोन्नतिर्लोक्यते
सूर्यास्तेऽप्युदयेऽत्र सूर्यहिमगू साध्यौ सपातौ तदा ।
यद्वा सावयवा गतैष्यतिथयः साध्या रविघ्ना लवाः
१२
तैर्युक्तोनितभास्करोऽब्ज इति वा पञ्चाङ्गतोऽर्कोऽप्यगुः ॥ २ ॥
क्रान्तेर्भागाः शीतगोर्बाणभागैः संस्कार्यास्ते साङ्गभार्कोपमांशैः ।
६
द्यर्कादिन्दोर्दोर्गुणघ्नास्ततो ये खाक्षैरंशाः संस्कृतास्तैश्च याम्यैः ॥ ३ ॥
५०
द्विगुणतिथिविभक्तास्तेऽङ्गुलाद्यं स्वदिक्कं
वलनमथ शशाङ्काद्द्यर्कतः कोटिभागाः ।
हर इह तिथिभक्ताः षड्गुणेभ्यो हराप्तं
१५ ३६
हररहितयुतं सत्तद्दले कोटिकर्णौ ॥ ४ ॥
षडङ्गुलेनात्र विधाय वृत्तं सूत्रेण तस्मिन्वलनं प्रदेयम् ।
शुक्ले पुरस्तात्परतोऽपि कृष्णे कोटिं च केन्द्राद्वलनीय सूत्रे ॥ ५ ॥
दत्त्वाऽत्र कर्णेन विधाय वृत्तं तुङ्गं विषाणं हिमगोरवेहि ।
यद्वोन्नतत्वं वलनान्यदिक्स्थं किंचाल्पकत्वात्परिलेखनेन ॥ ६ ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते करण-
कौस्तुभे चन्द्रशृङ्गोन्नत्यधिकारो दशमः ॥

---

* अयं श्लोको ग. पुस्तके नास्ति ।

---

१ क. °त अत्र° । २ ग °नायम्° ।

# एकादशोऽधिकारः ।

*यत्संहितातिकुशलैर्बहुधा फलानि
खेटाहवे मुनिवरैः प्रतिपादितानि ।
तस्मात्तनोति विशदं कविकृष्णशर्मा
तोषाय सर्वविदुषां खगयुद्धकर्म ॥ १ ॥

शरा रसाः सप्त खगास्तथाऽक्षाः पृथक्त्रिभज्याश्रवणान्तरघ्नाः ।
५ ६ ७ ९ ५
दन्तैर्गजाब्जैर्दशाभिस्तथाऽङ्करामैः शरैश्च क्रमशो विभक्ताः ॥ २ ॥
३२ १८ १० ३६ ५
+ त्रिभज्यकायाः श्रवणेऽधिकोने कार्याः पृथक्स्थाः फलहीनयुक्ताः ।
कुजादिबिम्बोत्थकलास्त्रिभक्ता बिम्बाङ्गुलानीति भवन्ति तेषाम् ॥ ३ ॥
ऋज्वोर्गतैष्या युतिरत्र मन्दभुक्तेर्ग्रहाच्छीघ्रजवेऽधिकोने ।
याम्यं त्वनृज्वोरथ वक्रगोऽधिकस्तदैष्याल्पतरो गता चेत् ॥ ४ ॥
विक्षेपलिप्ताश्च तयोर्विभक्ता गत्यन्तरेणाऽऽप्तदिनैर्गतैष्यैः ।
ऋज्वोरनृज्वोश्च यदैकवक्री जवैक्यभक्ताऽत्र युतिः प्रसाध्या ॥ ५ ॥

इत्याप्तैर्दिवसैः खगौ समकलौ स्तश्चालितौ यौ तदो ।
दृक्कर्म द्विविधं प्रसाध्य च तयोर्देयं पुरावत्पुनः ।
तुल्यौ राशिमुखेन तौ स्वविषयोद्भ्याम्यसूत्रस्थितौ ।
यत्राक्षेण विना ध्रुवाभिमुखगौ द्वाभ्यां कदम्बोन्मुखौ ॥ ५ ॥
कार्यौ तद्विशिखौ[तु] तौ युतिवशात्सूत्रे समाख्यौ स्फुटौ
धीवे वा कुरुताद्ग्रहौ स्वशरदिक् सस्थावथो लब्धिपुः ।
व्यस्ताशौ यदि तच्छरौ समदिशौ चाप्येकभिन्नाशयो-
रिष्वोरन्तरयोगतो जिनहृतं खेटान्तरे स्युः कराः ॥ ६ ॥
२४
खेटस्पष्टजवान्तराहृतनतिर्गत्यन्तरेणोद्धृता ।
मध्येनेन्द्विनयोः स्फुटा द्युचरयोर्भेदाख्ययोगे भवेत् ।

* अयं श्लोको म. पुस्तके नास्ति । + इदं श्लोकार्धं म. पुस्तक एव दृश्यते ।

१ म °ल्याप्तदिनैर्वि° । २ म. °तौ कृत्किशा ।

मध्येन्दूर्कजवान्तरेण विहृता स्पष्टस्वगत्या हृता ।
स्पष्टा वा स्वनतिः पृथग्द्युचरयोर्भेदोऽन्तरं स्याच्छरः ॥ ७ ॥
स्फुटवलनलवार्धेद्धाणवेदाधिकाः स्युः
४५
गगननवविशुद्धास्तज्ज्यकावर्गहीनात् ।
९०
त्रिभगुणमववर्गान्मूलभक्ताऽनतिर्या ।
त्रिभगुणगुणिताऽसौ सेपसंस्कारयोग्या ॥ ८ ॥
एवं शरे विधिः कार्यो गुणहारविपर्ययात् ।
अभेद्योगे बाणः स्यात्तयोरन्तरसाधने ॥ ९ ॥
अंशाद्वूनेऽपसव्यं कुजमुखखगयोः संगमोंऽशाधिके स्यात्
उल्लेखो मानयोगार्धसम इह भवेदंशुमद्योऽन्तरे चेत् ।
मानैक्यार्धाधिकेऽथो त्विह लघुनि भवेद्भेदयोगोऽत्र नोक्तं
कुर्याद्दृक्कर्म किंतु ग्रहवदिह रवेर्लम्बनाद्यं स्फुटार्थम् ॥ १० ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञाविरचिते करणकौस्तुभे
ग्रहयुत्यधिकार एकादशः ॥

---

१ ख. "भेदोऽन्" । २ ख. "द्योंतरे" ।

# द्वादशोऽधिकारः ।

दास्रादष्टौ ध्रुवांशाः कृतिरिभशिखिनो नन्दवेदा द्विषट्काः
८ २० ३८ ४९ ६२
षड्भूतर्क्षा वेदनन्दा रसदश च गजाशास्त्वगार्कास्तु भाग्यात् ।
६६ ९४ १०६ १०८ १२७
अष्टेन्द्राः पञ्चतिथ्यो वियदगशशिनरूपष्टचन्द्रा गजाङ्क-
१४८ १५५ १७० १८३
ग्लावो द्व्यग्जद्विराः स्युः कृतयुगलयमाः खाग्नियुग्मानि मूलात् ॥१॥
१९८ २१२ २२४ २३०
द्व्यब्ध्यग्रीण्यक्षतत्त्वान्यथ कुरसयमा नागतत्त्वानि बाणा
२४२ २५५ २६१ २५८
भं 'पट्पिण्डाः खदन्ताः शरयमलगुणाः सप्तदेवाः खमन्त्ये ।
२७५ २८६ ३२० ३२५ ३३७ ०
स्वर्णे तेष्वक्षभाग्राच्छरत इनहृतात्माकूपरे याम्यबाणे
१२
व्यस्तं सौम्ये ध्रुवाः स्युर्निजविषयभवास्तेऽन्यथा व्यस्तसंस्थाः ॥२॥

दशार्काः शरा व्यङ्घ्रिवेदा दशेशा रसाः खं नगाः खं पतङ्गाश्च विश्वे
१० १२ ५ ३॥। १०,११ ६ ० ७ ० १२ १३
शिवा द्वौ च सप्ताग्नयो भूर्द्वयं च प्रथश्चाष्ट बाणाः शरा युग्मषट्काः ।
११ २ ३७ १ २ ३ ८ ५ ५ ६२
श्रुतेः खाग्नयोऽक्षाग्नयोऽभ्रं जिनाश्च नगाक्षीणि ख हस्तचित्रादिभेषु
३० ३५ ० २४ २७ ०
विशाखादिषट्के च कर्क्षत्रयेऽपि शराशा यमाशाः परेषां च सौम्याः ॥ ३ ॥

मजापत्यपौष्णसलुब्धाम्यगस्त्यध्रुवांशा अपवत्सहृद्भाग्यकाश्च
कुपट् ज्यष्टचन्द्राः शशीभाग्निबाणा नगेभा युगेभाब्जगाः पञ्चबाणाः ।
६१ १८३ ८१ ९३ ८७ १८४ ५५
शरांशास्तदीयाः खवेदाश्च रामाः खवेदा इभाः सप्तशैला नगाश्च
४० ३ ४० ८ ७७ ७
खरामा इमे लुब्धकागस्त्ययोश्च यमाशाः परेषां च ते सौम्यदिक्काः ॥ ४ ॥
३०
५

| नक्षत्राणि | अ | भ | कृ | रो | मृ | आ | पु | पु | आ |
|---|---|---|---|---|---|---|---|---|---|
| ध्रुवाङ्काः | ० | ० | १ | १ | २ | २ | ३ | ३ | ३ |
| | ८ | २० | ८ | १९ | २ | ६ | ४ | १६ | १८ |
| | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| शराः | उ | उ | उ | द | द | द | उ | उ | द |
| | १० | १२ | ५ | ३ | १० | ११ | ६ | ० | ७ |
| | ० | ० | ० | ४५ | ० | ० | ० | ० | ० |
| ताराङ्काः | ३ | ३ | ६ | ५ | ३ | १ | ४ | ३ | ५ |
| कालांशाः | १४ | २१ | १५ | १४ | २० | १९ | १४ | २१ | १४ |

| नक्षत्राणि | म | पू | उ | ह | चि | स्वा | वि | अ | ज्ये |
|---|---|---|---|---|---|---|---|---|---|
| ध्रुवाङ्काः | ४ | ४ | ५ | ५ | ६ | ६ | ७ | ७ | ७ |
| | ७ | २८ | ५ | २० | ३ | १८ | २ | १४ | २० |
| | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| शराः | उ | उ | उ | द | द | उ | द | द | द |
| | ० | १२ | १३ | ११ | २ | ३७ | १ | २ | ३ |
| | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ताराङ्काः | ५ | २ | २ | ५ | १ | १ | ४ | ४ | ३ |
| कालांशाः | १४ | १४ | १४ | १४ | १३ | १३ | १४ | १४ | १३ |

| नक्षत्राणि | मू | पू | उ | अ | श्र | ध | श | पू | उ | रे |
|---|---|---|---|---|---|---|---|---|---|---|
| ध्रुवाङ्काः | ८ | ८ | ८ | ८ | ९ | ९ | १० | १० | ११ | ० |
| | २ | १५ | २१ | १८ | ९ | १६ | २० | २५ | ७ | ० |
| | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| शराः | द | द | द | उ | उ | उ | उ | उ | उ | उ |
| | ८ | ५ | ५ | ६२ | ३० | ३५ | ० | २४ | २७ | ० |
| | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ताराङ्काः | ११ | ४ | ४ | १ | ३ | ४ | १०० | २ | २ | ३२ |
| कालांशाः | १५ | १५ | १५ | १२ | १३ | १४ | १७ | १७ | १७ | १७ |

| | प्रजापति | अपांवत्स | लुब्धक | अग्नि | अगस्त्य | अप | ब्रह्महृद् |
|---|---|---|---|---|---|---|---|
| ध्रुवांशा. | २ | ६ | २ | १ | २ | ६ | १ |
| | १ | ३ | २१ | २३ | २७ | ४ | २९ |
| | ० | ० | ० | ० | ० | ० | ० |
| शराः | उ | उ | द | उ | द | उ | उ |
| | ४० | ३ | ४० | ८ | ७७ | ७ | ३० |

अथ नैजदेशविहितध्रुवतः शरतोऽपि भादि खलु खेटधिया ।
विदधीत यन्त्रलवपूर्वमतो निशि यातकालमथ मग्रहयोः ।
खगयोगसाधनविधेः प्रयुतिं नृपरञ्जनाय विदधीत धिया ॥ ५ ॥
इदं गाथाछन्दः ।

भध्रुवधुचरभेदकलाभ्यो यातयेयदिवसैर्ग्रहभुक्त्या ।
भध्रुवादिविचरेऽधिकहीने स्याद्युतिः कुटिलगे विपरीतम् ॥ ६ ॥
मध्यर्क्षितः स्फुटचरं ध्रुवकात्स्वकीयात् साध्यं ततो दिनदलं तदवाप्य चेष्टम् ।
लग्नं ध्रुवादपि निजोदयकैस्तदङ्गराश्यन्विताङ्के विवरे निशि यातनाड्यः ॥ ७ ॥
निजनिजपलभाया मध्यलग्नं विधेयं स्थिरमिति सुखसिध्यै दस्रमादौ खमध्ये ।
उदयति यदि वाऽस्त मार्ग्यमाने तथैव घुघसुद उदयास्ते लग्नके साधनीये ॥ ८ ॥
कभशकटं घुचरस्तदा भिनत्ति गोवि गजचन्द्रलवैर्यदाऽस्य याम्यः ।
१८
यदि विशिखः खशराङ्गुलाधिकः स्यादिति शनिरिन्दुरसृग्जगरक्षयः स्यात् ॥ ९ ॥
५०

यदाऽष्टमस्थो दितिभाच्च राहुर्भिनत्ति चन्द्रः शकटं कभस्थः ।
पातान्यथात्वे यदि भौममन्दौ युगान्तरे नेह युगेऽल्पबाणे ॥ १० ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते करणकौस्तुभे
नक्षत्रच्छायाधिकारो द्वादशः ।

---

१ ग. "क्षैत्रोऽस्फु" ।

## चतुर्दशोऽधिकारः ।

तत्संभवासंभवलक्षणं प्राक् विलोक्य धीमान् विदधीत पातम् ।
पञ्चाङ्गपत्रादथवा प्रगृह्य सार्कभानू अपि वा सुखार्थम् ॥ १ ॥
यद्येकगोले रविसायुभानू विभिन्नगोलेऽपि रवेर्भुजांशाः ।
पञ्चेषुतोऽल्पा अपि चास्ति पातः ततोऽधिकाः संशय एव तस्य ॥ २ ॥
५५
तोयादितेयेशगते दिनेशे दितेर्भतो द्वादशगोऽपि राहुः ।
मृगेन्द्रपुष्येऽप्यहिमात्संस्थस्तथा श्रुतौ पैत्र्यभपट्कगोऽपि ॥ ३ ॥
मैत्रान्त्यखण्डे च कभे च हस्ताच्चतुष्कसंस्थोऽप्यथ वैश्वदेवे ।
मूलाद्यखण्डे गुरुभार्कसंस्थः पातस्तदा नेत्यपि चैकगोले ॥ ४ ॥

इति पातसंभवासंभवासंभवलक्षणम् ।

---

### स्ववंशकीर्तनपुरःसरं ग्रन्थसमाप्तिवर्णनम् ।

दनुजमनुजदेवादीन्ससर्जाधिसृष्टः
सुतवर इति योऽभूत् कश्यपो मानसोत्थः ।
हरिहरगणनाथास्तेऽवतीर्णा यतोऽस्मात्
जयति मुनिवरोऽसौ यत्स्मृतिः पापहन्त्री ॥ १ ॥
तदन्वये पावन एव तत्र वंशावतंसोऽभवदुन्नतांसः ।
श्रीमन्महाज्यौतिषविद्वदग्र्यो नाम्ना महादेव इति प्रसिद्धः ॥ २ ॥
तज्जाया किमु जाह्नवी विजयते बर्वाइनाम्नी सदा
तस्यां तज्जनितः सुपुण्यनिचयः श्रीरङ्गनाथानुजः ।
कृष्णः कौङ्कणसच्चटाकनगरे देशस्थवर्यो वसन्
तेनायं करणेषु कौस्तुभ इति ग्रन्थः कृतो धीमता ॥ ३ ॥
गणितभणितरम्यं दूषणापास्तसंघं(घे)
दृढगुणबहुहारप्रोक्तपद्याभिरम्यम् ।
अभिनवरचनाभिः खेटमध्यादिकर्म
वदति गणकचक्रारकृष्णनाथोक्ततन्त्रम् ॥ ४ ॥

---

१ म °मान्मणिन विद्धनात् ।

एवं परोपकरणैकधिया विविच्य
तन्त्राणि मुख्यमुनिमानवनिर्मितानि ।
तत्सारमेव रचितं बुधहंसबुद्ध्या
श्रीसाम्बशंकरपदेऽर्पणमस्तु तस्य ॥ ५ ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते स्वकृवतन्त्ररत्नाद्धृते करणकौस्तुभे ग्रन्थालंकारश्चतुर्दशः ॥

